# षोढोपनिषत्

अथाह वै श्म शवः शानं शयनं शवानां शयनं श्मशानं तदधिष्ठानो महाकालस्तत्पर्यङ्कसमासीनां विश्वव्यापकरूपिणीं कालीं कालादिसंग्रासात् कालीं चतुर्युगाधिष्ठात्रीं स्वस्मिन् भाव्य षोढां न्यसेत् । स्थानशुद्धिन्यासं विधाय षोढां न्यसेत् । अथ षोढान्यासी षट्कालित्वं गच्छति । सेयं षट्कला परा परात्परा परात्परातीता चित्परा चित्परात्परा चित्परात्परातीता । षण्णां योगे षोढा भवेत् । वैष्णवकलायुक्तां मातृकायुक्तां वैष्णवीं न्यसेदिति प्रथमः । स परारूपो भवेत् । स भूमिं जयति । स शक्तिरूपो भवेत् । अथ वै कामकलापुटितां श्रीकलां श्रीकलापुटितां कामकलां [illegible]स्थाने न्यसेत् । द्वितीयारूपो भवेत् । सोऽमृतत्वं गच्छति । स ज[illegible]रतीति वै यज्ञे गीर्णं भवति । आदिकलापुटितां श्रीकलां श्रीकलापुटितामादिकलां मातृस्थाने न्यसेत् । स सिद्धीश्वरो भवेत् । स वह्निं जयति । दिवारात्रि-व्यापी भवेत् । कूर्चं चन्द्रं कूर्चं चन्द्रमन्तर्दृष्टिमद्दीपनमन्त्रं राज्ञीपुटितमेतेन पुटितां राज्ञीं न्यसेत् । स खेचरो भवेत् । स वायुपुरगामी भवेत् । स कलावान् भवेत् । चतुर्थीरूपो भवेत् । अनुलोमविलोमेन मूलमन्त्रं केवलं न्यसेत् । विद्यान्यासरूपो भवेत् । सर्वं जयति । स पञ्चमीरूपो भवेत् । स चाकाशं जयति । अष्टोत्तरशतानुलोमविलोमाकृतिक्रमेण देवतां व्यापयेत् । स ध्वनिरूपो भवेत् । सर्वं जयति । सर्वं जरति । महापात-कोपपातकानि तरति । वयःस्थैर्यकरो भवेत् । अष्टसिद्धिदाता भवेत् । तद्दर्शनेन देवत्वं भवेत् । षष्ठीकलावान् भवेत् । विश्वरूपो भवेत् । यं पश्यति तं शिवं कुरुते । नमस्कारान्मूर्तिस्फोटो भवेत् । स गारूपनाशको भवेत । स महेन्द्रजालदर्शको भवेत् । तद्दर्शनात् सिद्धीश्वरो भवेत् । पुटिति

छिन्नाकल्पामुआयामङ्गषोढां न्यसेत् । तत्स्पर्शादष्टलोहस्पर्शो भवेत् । शक्तिकुण्डे जिह्वां नाडीं वा न्यस्य यो जपेत् स कालीरूपो भवेत् । इति शिवम् ॥

इत्याथर्वणे सौभाग्यकाण्डे षोढोपनिषत् समाप्ता

---

# सुमुख्युपनिषत्

अथैनामावाहयाम्यनवद्यां शवाधिरूढां रक्तवस्त्रालङ्कारयुक्तां रक्तपी. ष्टां गुञ्जाहारविभूषितहृदयां षोडशसमासमाकारां युवतीं पीनोन्नतघनस्तनीं स्वहृदये चिन्तयित्वोच्छिष्टपदमाभाष्य चण्डालिनीमभिमतां सुमुखीं तदन्ते देवीं चोक्त्वा महापिशाचिनीं तस्माद्धरामग्निमायां बिन्दुमौलिनीं समुच्चार्य ठान्तत्रयं सविसर्गं समुद्धृत्य देवीं हृदये विभाव्य ईङ्कारस्वरूपं सबिन्दुमुखं युग्मस्तनपदान्तं भावयित्वा यन्त्रं योनिं तदुपरि शिववक्त्रयोनिमष्टपत्रं षोडशाब्जकं वृत्तमेकं चतुरश्रं यन्त्रराजं विचिन्त्यादौ देवीमावाह्य बिन्दौ गन्धाक्षतपुष्पधूपदीपान् संस्कृतान्नं नानाविधं निवेद्याद्यं पलं मीनाद्यन्नं मूलेन मूलां सन्तर्प्य संस्कृतां पुरस्कृतां योनिं देवतायै निवेदयेत् । सुकृती चतुरश्रान् देवानिन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानान् वामावर्तेन संपूज्य षोडशाब्जके कलावती कपालिनी कल्याणी नित्या कमला क्रिया कृपा आकुला कुलीना कुमारी कुण्डला आकरा किशोरी कोमला कल्या कुमुदा एताः पूजयेत् । अष्टाब्जे ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा महालक्ष्मीः । ततो योनिपञ्चके चन्द्रा चन्द्रानना चारुमुखी चामीकरप्रभा चतुरा । ततो योनौ वामा ज्येष्ठा रौद्री । तदन्ते रतिप्रीति-

मनोभवाः पूज्याः । प्रान्ते पूजां सन्तर्प्य पुनर्नैवेद्यं बहुगुणं निवेद्यारात्रिकं निवेद्य परां पूजयन् महाछत्रचामरादिसर्वदेवैर्नमस्कृतामाद्यशक्तिमष्ट-जातीयां स्वयं भैरवो भूत्वा कुलाकुलामृतैर्देवीं सन्तर्प्य स्वहृदये तां परां विसृज्य सुखेनैव शिवशक्त्यात्मको भावयन् विहरेत् । स सिद्धीश्वरो भवेत् । स सर्वेश्वरो भवेत् । स लोकाध्यक्षो भवेत् । भवो भूत्वा विभावयति ॥

इत्याथर्वणे सौभाग्यकाण्डे मुमुक्ष्युपनिषत् समाप्ता

---

# हंसषोढोपनिषत्

अथाह वै हंसषोढान्यासी शिवो भवेत् । सर्वसिद्धीश्वरो भवेत् । एतत्फलं वक्तुं सदाशिवोऽपि न समर्थः । षोढान्यासस्य विरूपाक्षमहाकाल ऋषिः । अनुष्टुप् छन्दः । काली देवता । कालीदेहार्थे विनियोगः । हंसेनाङ्ग-षट्कम् । स निर्वाणरूपो भवेत् । हंसः कं खं गं घं ङं महामुण्डमालाधारिणि महाकालप्रिये मां रक्ष रक्ष । षट्चक्रवासिनि वागीश्वरि जिह्वाग्रे वस । हं नमः शिरसि प्रोतं वेद शिवो भवेत् । हंसः चं छं जं झं ञं महात्रि-पुरभैरवि पुस्तकाक्षमालाधारिणि शत्रुमुखस्तम्भनं कुरु कुरु स्वाहेति महा-पद्मे । हंसः टं ठं डं ढं णं डां डीं डं डाकिनि मां रक्ष रक्ष स्वाहेत्य-नाहते न्यसेत् । तृतीयारूपो भवेत् । हंसः तं थं दं धं नं महामारि मार-हारिणि हुं हुं दारिद्र्यं हर हर स्वाहा । गुं न्यसेत् । स ब्रह्मकालीत्वं गच्छति । चतुर्थत्वं गच्छति । हंसः पं फं बं भं मं मार्जारि वीरावलि ममालस्यं नाशय नाशय । हंसः यं रं लं वं शं षं सं हं लम्बोदरि मातर्महामङ्गलप्रिये

मम जाड्यं छेदय छेदय । भ्रंश भ्रंश । भगवति मां रक्ष रक्ष । भुवन-धारिणि मां धारय धारय । स्वाहापदद्वयं न्यस्य शिवो भवेत् । अथ वै षष्ठीं न्यसेत् । हंसः लं क्षं महालक्ष्मि राजराजेश्वरि महा-कालप्रिये कालखण्डिनि खण्डिनि खण्डय खण्डय खां खीं खूं खैं खों खौं खः खनित्रि समे स्वाहेति सर्वाङ्गे न्यसेत् । हंसः पञ्चाशत् व्यापकं कुर्यात् । इति षष्ठी । स शिवो भवेत् । स सोमयाजी भवेत् । स विरक्तो भवेत् । स सर्वदीक्षितो भवेत् । सोऽमृतत्वं गच्छति । स सर्वकालत्वं गच्छति । स सर्वन्यासकारी भवेत् । अनधीतगतिर्विद्यां लभेत् । कर्तव्याकरणादिकर्ता भवेत् । सर्वसिद्धीश्वरो भवेत् । कालीरूपो भवेत् । सोऽहं हंस इत्याह भगवान् सदाशिव इति प्रोतं वेद ॥

इत्याथर्वणे सौभाग्यकाण्डे हंसषोढोपनिषत् समाप्ता

---



उपनिषत्सङ्ग्रहः

इस संग्रह में १८८ उपनिषद् समाविष्ट हैं जिन्हें दो भागों में रखा गया है। प्रथम भाग में ईश आदि १२० उपनिषद् हैं। द्वितीय भाग में योग आदि ६८ उपनिषद् हैं।

प्रथम भाग के उपनिषदों का मुख्य विषय 'ब्रह्म-विद्या' है। इस भाग में वे सभी उपनिषद् सम्मिलित हैं जिन पर श्री शंकराचार्य ने भाष्य लिखा है।

द्वितीय भाग के उपनिषदों का पांच खण्डों में विभाजन हुआ है: (१) योग, (२) वेदान्त, (३) वैष्णव, (४) शैव, और (५) शाक्त। ये सभी उपनिषद् दर्शन-शास्त्र के स्रोत माने जाते हैं।

आरम्भ में विषयानुक्रमणी और लघु भूमिका भी दी गई हैं।

मूल्यः रु० १५० (सजिल्द)
१२० (अजिल्द)